# कात्यायन शिक्षा

यदुदात्तात्परं नीचं स्वार्यं तत्परतो न चेत्
उदात्तात्स्वरितं वा स्याद्यत्र स्यात्स्वरितं वदेत् १

एकीभूतमुदात्तेन स्यादुदात्तमतः परम्
नीचं स्वार्यं यथोक्तं चेद्यच्च स्यात्स्वरितान्वितम् २

यदुदात्त इकारः स्यादनुदात्तेन संयुतः
इकारेण तदा स्वार्य्योऽभीन्धताभित्ययं यथा ३

पदकाले य एकार उदात्तः संहितोद्भवः
ओकारःस्वरसंयुक्तोऽयं न च स्वार्य्य एव सः ४

स्वरितं पदमध्यस्थमुदात्तेन समन्वितम्
पदकाले न पूर्व्वेण ततः स्वार्यन्तु यत्परम् ५

एकीभूताविकारौ चेदुदात्तस्वरितौ पदे
एकस्मिन्नेव तौ स्वार्य्यौ दीर्घपूर्वे तयोः परम् ६

पदस्य स्वरितस्थाने व्यञ्जनं जायते यदि
सन्धिकाले तदा नीचः स्वार्य्यः स्यात्तत्पुरः स्थितः ७

पदकाले यदा नादः स्वरितः स च इष्यते
सन्धिकाले तदा तस्मात्स्वार्य्यः पूर्वपदे तु यः ८

व्यञ्जनं स्वरितात्पूर्वं पञ्चमेनान्वितं यदि
स्वरितादुत्तरं तस्मात्स्वार्य्यो नादस्त्वनन्तरः ९

तच्च नीचमिति ज्ञेयं यद्येकस्मिन्पदे भवेत्
प्रचयं स्वरितादूर्ध्वमुपोपेदित्ययं यथा १०

नीचात्प्रचयतस्तस्मात्स्वरिता संहिता भवेत्
परेषां यत्तु पूर्वं स्यात्स्वरोच्चं नीचमेव तत् ११

उदात्तं पदकाले यत्संहितायां तथैव च
तस्मात्पूर्वं तु यत्किञ्चिदनुदात्तं तदुच्यते १२

यन्नीचं पदकाले तत्संहितायां तथैव च
उक्तं वा नीचहीनं चेत्पितृश्रवणं तद्भवेत् १३

इति महर्षिकात्यायनप्रणीता शिक्षा समाप्ता